# Preface to the First Edition

When the proprietor of the National Press, Allahabad, requested me to prepare for them a suitable text-book for High School classes, I readily agreed to do so since I was myself feeling the want of such a book ever since I took up teaching Sanskrit and examining answer-books and reviewing books in this language. Believing, as I do, in Sanskrit being the common inheritance which should be possessed and valued by all Indians irrespective of caste and creed, it pains me to find a gradual decline in the number of the enthusiasts for this language and a rapid fall in the number of students of Sanskrit in all classes—chiefly in the higher ones. There is surely something wrong with Sanskrit which induces the students—and their guardians—to prefer other subjects to Sanskrit. Want of suitable text-books in the High School classes is one of the main causes. At this stage the student can take little real interest in fables about lower animals. He requires a literature which is nearer him in thought and deed. I have tried to give him this in these selections. The lessons are, nevertheless, instructive and, I hope will leave a healthy impression on the student's mind. Some of them will further give him an idea about the subject-matter of the books he will have to read in higher classes.

The Notes given at the end are few and suggestive and are not at all meant for cramming. The

# Preface to the Revised Edition.

The book has been revised with a view to provide more prose passages than the first edition contained and to lessen the volume in order to make the whole book suitable for being prescribed as the text for the first paper. In selecting new passages care has been taken to see that they are of the required standard and have literary merit.

I feel pleasure in thanking the Board of High School and Intermediate Education, U. P. and its Sanskrit Committee for prescribing the book for the High School Examination. In this revised edition, the lessons prescribed by the Board have not been touched except for correcting printing mistakes.

I have received considerable help from my pupil Pt. Ram Krishna Shukla, M.A., in making the revision and I have much pleasure in acknowledging the same.

I hope this edition will prove more useful than the first.

*June 1929.* } BABURAM SAKSENA.

# Preface to the Revised Edition.

The book has been revised with a view to provide more prose passages than the first edition contained and to lessen the volume in order to make the whole book suitable for being prescribed as the text for the first paper. In selecting new passages care has been taken to see that they are of the required standard and have literary merit.

I feel pleasure in thanking the Board of High School and Intermediate Education, U. P. and its Sanskrit Committee for prescribing the book for the High School Examination. In this revised edition, the lessons prescribed by the Board have not been touched except for correcting printing mistakes.

I have received considerable help from my pupil Pt. Ram Krishna Shukla, M.A., in making the revision and I have much pleasure in acknowledging the same.

I hope this edition will prove more useful than the first.

*June 1929.* } BABURAM SAKSENA.

# संस्कृतपाठावलि

## प्रथमो भागः

# संस्कृतपाठावलि

## प्रथमो भागः

# संस्कृत-पाठावलि

## प्रथमो भागः

### १–सरस्वतीवन्दना

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयतु सरस्वती देवी ॥ १ ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता,
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता,
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥२॥

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ ३ ॥

तद्विलोक्याद्भुतं विप्रो विस्मयस्थगितागतिः ।
बभूव मन्त्रगणनाविच्छेदाविचलाधरः ॥ १० ॥

ततः स्वयं जातवेदाः समुत्थाय महीभुजे ।
ददौ फलं स्वहस्तेन तदपृच्छच्च सोऽग्रजः ॥ ११ ॥

भगवन्नियमस्थस्य न मेऽद्यापि प्रसीदसि ।
विकीर्णाचारमनसः कथं तुष्टोऽसि भूपतेः ॥ १२ ॥

इत्युक्तः सोऽब्रवीद्वह्निः संकल्पोऽस्याभवद्दृढः ।
शिरश्छित्त्वा जुहोमीति दर्शनेन विना मम ॥ १३ ॥

त्वं तु शुष्कक्रियातन्त्रः केवलं मन्त्रसाधकः ।
सिद्धिः सत्त्ववतामेव संकोचो ह्यतिसंयमः ॥ १४ ॥

इत्युक्त्वा भगवानग्निः कृतकृत्यं नृपं व्यधात् ।
तस्यैव वाक्याद्विप्रं तं विधायान्तरधीयत ॥ १५ ॥

ततः स्वनगरीं गत्वा महासत्त्वो महीपतिः ।
इन्दीवरप्रभासक्तश्चचारोद्यानभूमिषु ॥ १६ ॥

धातुवादी ततोऽभ्येत्य धातुशर्माभिधो वचः ।
तमभ्यधादहं ताम्रं विदधे देव काञ्चनम् ॥ १७ ॥

हेमकारं समाहूय द्राविते शुल्वपिण्डके ।
स्वैरं राज्ञा समादिष्टो बहु चिक्षेप चूर्णकम् ॥ १८ ॥

तद्विलोक्याद्भुतं विप्रो विस्मयस्थगितागतिः ।
बभूव मन्त्रगणनाविच्छेदाविचलाधरः ॥ १० ॥

ततः स्वयं जातवेदाः समुत्थाय महीभुजे ।
ददौ फलं स्वहस्तेन तदपृच्छच्च सोऽग्रजः ॥ ११ ॥

भगवन्नियमस्थस्य न मेऽद्यापि प्रसीदसि ।
विकीर्णाचारमनसः कथं तुष्टोऽसि भूपतेः ॥ १२ ॥

इत्युक्तः सोऽब्रवीद्वह्निः संकल्पोऽस्याभवद्दृढः ।
शिरश्छित्त्वा जुहोमीति दर्शनेन विना मम ॥ १३ ॥

त्वं तु शुष्कक्रियातन्त्रः केवलं मन्त्रसाधकः ।
सिद्धिः सत्त्ववतामेव संकोचो ह्यतिसंयमः ॥ १४ ॥

इत्युक्त्वा भगवानग्निः कृतकृत्यं नृपं व्यधात् ।
तस्यैव वाक्याद्विप्रं तं विधायान्तरधीयत ॥ १५ ॥

ततः स्वनगरीं गत्वा महासत्त्वो महीपतिः ।
इन्दीवरप्रभासक्तश्चचारोद्यानभूमिषु ॥ १६ ॥

धातुवादी ततोऽभ्येत्य धातुशर्माभिधो वचः ।
तमभ्यधाददं ताम्रं विदधे देव काञ्चनम् ॥ १७ ॥

हेमकारं समाहूय द्राविते शुल्वपिण्डके ।
स्वैरं राज्ञा समादिष्टो बहु चिक्षेप चूर्णकम् ॥ १८ ॥

वृत्तं तस्मा अकथयत्। तच्छ्रुत्वा बोधिसत्त्वः " धिगस्तु बत भो जातिं यत्र हि नाम जातस्य जरा प्रज्ञायते " इति संविग्न-हृदयः तत एव प्रतिनिवृत्य प्रासादमभ्यरुक्षत्।

राजा " कस्मात् कारणात् मम पुत्रः क्षिप्रं प्रतिनिवृत्तः, " इत्यभाषीत्। " जीर्णं पुरुषं दृष्ट्वा देव " इति। " 'जीर्णं पुरुषं दृष्ट्वा प्रव्रजिष्यति' इत्याहुः। कस्मात् मां नाशयथ, शीघ्रं पुत्राय नाटकानि सज्जयत; सम्पत्तिमनुभवन् प्रव्रज्यायाः स्मृतिं न करिष्यति " इत्युक्त्वा आरक्षं वर्धयित्वा सर्वासु दिक्षु अर्ध-योजने अर्धयोजने अतिष्ठिपत्।

पुनरेकदिवसं बोधिसत्त्वः तथैवोद्यानं गच्छन् देव-ताभिः निर्मितं व्याधितं पुरुषं दृष्ट्वा, यथापूर्वं पृष्ट्वा, संविग्न-हृदयो न्यवर्तिष्ट, प्रासादं चाभ्यरुक्षत्। राजाऽपि पृष्ट्वा, यथापूर्वं संविदह्य, समन्ततः पुनरेव वर्धयित्वा त्रिगव्यूति-प्रमाणे प्रदेशे आरक्षमतिष्ठिपत्।

अपरं पुनरेकदिवसं बोधिसत्त्वः तथैवोद्यानं गच्छन् देवताभिः विनिर्मितं पुरुषमेकं कालकृतं दृष्ट्वा, यथाप्रथमं पृष्ट्वा, संविग्नहृदयः न्यवर्तिष्ट प्रासादं चाभ्यरुक्षत्। राजापि पृष्ट्वा, प्रथममिव, संविदह्य, पुनः वर्धयित्वा समन्ततः योजनप्रमाणे प्रदेशे आरक्षमतिष्ठिपत्।

त्तं तस्मा अकथयत् । तच्छ्रुत्वा बोधिसत्त्वः " धिगस्तु बत ो जातिं यत्र हि नाम जातस्य जरा मज्ञायते " इति संविग्न- ृदयः तत एव प्रतिनिवृत्य प्रासादमभ्यरुक्षत् ।

राजा " कस्मात् कारणात् मम पुत्रः क्षिप्रं प्रतिनिवृत्तः, " त्यप्राक्षीत् । " जीर्णं पुरुषं दृष्ट्वा देव " इति । " 'जीर्णं पुरुषं ृष्ट्वा प्रव्रजिष्यति' इत्याहुः । कस्मात् मां नाशयथ, शीघ्रं पुत्राय नाटकानि सज्जयत; सम्पत्तिमनुभवन् प्रव्रज्यायाः स्मृतिं न करिष्यति " इत्युक्त्वा आरक्षं वर्धयित्वा सर्वासु दिक्षु अर्ध- योजने अर्धयोजने अतिष्ठिपत् ।

पुनरेकदिवसं बोधिसत्त्वः तथैवोद्यानं गच्छन् देव- ताभिः निर्मितं व्याधितं पुरुषं दृष्ट्वा, यथापूर्वं पृष्ट्वा, संविग्न- दयो न्यवर्तिष्ट, प्रासादं चाभ्यरुक्षत् । राजाऽपि पृष्ट्वा, यथापूर्वं संविदह्य, समन्ततः पुनरेव वर्धयित्वा त्रिगव्यूति- प्रमाणे प्रदेशे आरक्षमतिष्ठिपत् ।

अपरं पुनरेकदिवसं बोधिसत्त्वः तथैवोद्यानं गच्छन् देवताभिः विनिर्मितं पुरुषमेकं कालकृतं दृष्ट्वा, यथाप्रथमं पृष्ट्वा, संविग्नहृदयः न्यवर्तिष्ट प्रासादं चाभ्यरुक्षत् । राजापि पृष्ट्वा, प्रथममिव, संविदह्य, पुनः वर्धयित्वा समन्ततः योजनप्रमाणे प्रदेशे आरक्षमतिष्ठिपत् ।

कपाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥ ६ ॥

सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसङ्कुलाम् ॥ ७ ॥

प्रासादैः रत्नविकृतैः पर्वतैरिव शोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ ८ ॥

काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः ।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः ॥ ९ ॥

विन्ध्यपर्वतजैर्मत्तैस्तथा हैमवतैरपि ।
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः ॥ १० ॥

ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ ११ ॥

सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ १२ ॥

तादृशानां सहस्रैस्तामभिपूर्णा महारथैः ।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १३ ॥

इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी ।
महर्षिकल्पो राजर्षिस्त्रिषु [illegible] १४ ॥

अपरेद्युरमात्यो द्वितीयं चरणं लिखितं दृष्ट्वा स्वयं तृतीयं लिलेख—

' सा चेदपगता लक्ष्मीः '

परेद्युः राजा चतुर्थं चरणं लिखति—

संचितार्थोऽपि नश्यति ' ॥

ततो मुख्यामात्यो राज्ञः पादयोः पतति—' देव, क्षन्तव्योऽयं ममापराधः ' ।

---

## ६—नवाभिषिक्तं युवराजं प्रति मन्त्रिणः उपदेशः

अतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन् कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैः । न निन्द्यसे साधुभिः । न धिक्क्रियसे गुरुभिः । नोपालभ्यसे सुहृद्भिः । न शोच्यसे विद्वद्भिः । यथा च न प्रकाश्यसे विटैः । न प्रतार्यसे कुशलैः । नावलुप्यसे सेवकवृकैः । न वञ्च्यसे धूर्तैः । न विडम्ब्यसे लक्ष्म्या । न नर्त्यसे मदेन । नाक्षिप्यसे विषयैः । नावकृष्यसे रागेण । नापह्रियसे सुखेन । कामं भवान् प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः । तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि । तथापि भवद्गुणसं

रूपकाणां शतमुत्पद्यते। ततस्तेन मया अजाद्वयं ग्रहीतव्यम्। ततः पाण्मासिकप्रसववशात् ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिः महिषीर्महिषीभिः वडवाः, वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति, तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुश्शालं गृहं सम्पद्यते। ततः कश्चिद् ब्राह्मणो मम गृहमागत्य प्राप्तवयस्कां रूपाढ्यां कन्यां दास्यति। तत्सकाशात् पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिन् जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वा अश्वशालायाः पृष्ठदेश उपविष्टः तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गात् जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि, गृहाण तावद् बालकम्। सापि गृहकर्मव्यग्रतया अस्मद्वचनं न श्रोष्यति। ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि। एवं तेन ध्यानस्थितेन तथा एव पादप्रहारो दत्तो यथा स घटो भग्नः स सक्तुभिः पाण्डुरतां गतः। अतोऽहं ब्रवीमि—

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा॥

———

ाणां शतमुत्पद्यते । ततस्तेन मया अजाद्वयं ग्रहीतव्यम् । षाण्मासिकप्रसववशात् ताभ्यां यूथं भविष्यति । ततोऽ- ः प्रभूता गा ग्रहीष्यामि, गोभिः महिषीर्महिषीभिः ः, वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति, तेषां विक्र- प्रभूतं सुवर्णं भविष्यति । सुवर्णेन चतुश्शालं गृहं द्यते । ततः कश्चिद् ब्राह्मणो मम गृहमागत्य प्राप्त- कां रूपाढ्यां कन्यां दास्यति । तत्सकाशात् पुत्रो मे भवि- । तस्याहं सोमशर्मेति नाम करिष्यामि । ततस्तस्मिन् चलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वा अश्वशालायाः श उपविष्टः तदवधारयिष्यामि । अत्रान्तरे सोमशर्मा दृष्ट्वा जनन्युत्सङ्गात् जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मीपमागमिष्यति । ततोऽहं ब्राह्मणीं कोपाविष्टोऽभि- षामि, गृहाण तावद् बालकम् । सापि गृहकर्मव्यग्रतया मद्वचनं न श्रोष्यति । ततोऽहं समुत्थाय तां पादप्रहारेण यिष्यामि । एवं तेन ध्यानस्थितेन तथा एव पादप्रहारो । यथा स घटो भग्नः स सक्तुभिः पाण्डुरतां गतः । ोऽहं ब्रवीमि—

अनागतवतीं चिन्तामसम्भाव्यां करोति यः ।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥

———

रूपकाणां शतमुत्पद्यते। ततस्तेन मया अजाद्वयं ग्रहीतव्यम्। ततः षाण्मासिकप्रसववशात् ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिः महिषीर्महिषीभिः वडवाः, वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति, तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुश्शालं गृहं सम्पद्यते। ततः कश्चिद् ब्राह्मणो मम गृहमागत्य प्राप्तवयस्कां रूपाढ्यां कन्यां दास्यति। तत्सकाशात् पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिन् जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वा अश्वशालायाः पृष्ठदेश उपविष्टः तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा जनन्युत्सङ्गात् जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि, गृहाण तावद् बालकम्। सापि गृहकर्मव्यग्रतया अस्मद्वचनं न श्रोष्यति। ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि। एवं तेन ध्यानस्थितेन तथा एव पादप्रहारो दत्तो यथा स घटो भग्नः स सक्तुभिः पाण्डुरतां गतः। अतोऽहं ब्रवीमि—

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा॥

———

## ६—मानवधर्माः

नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ।
न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ॥ १ ॥

न फालकृष्टे न जले न चित्यां न च पर्वते ।
न जीर्णदेवायतने न वल्मीके कदाचन ॥ २ ॥

न ससत्वेषु गर्तेषु न गच्छन्नापि च स्थितः ।
न नदीतीरमासाद्य न च पर्वतमस्तके ॥ ३ ॥

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ संध्ययोश्च यथा दिवा ॥ ४ ॥

नाग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम् ।
नामेध्यं प्रक्षिपेदग्नौ न च पादौ प्रतापयेत् ॥ ५ ॥

नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ ६ ॥

न कुर्वीत वृथा चेष्टां न वार्यञ्जलिना पिबेत् ।
नोत्सङ्गे भक्षयेद्भक्ष्यान्न जातु स्यात्कुतूहली ॥ ७ ॥

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलंकारं स्रजं करकमेव च ॥ ८ ॥

न मृल्लोष्टं च मृद्नीयान्नच्छिन्द्यात्करजैस्तृणम् ।
न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ॥ ९ ॥

एतत्त्रयं हि पुरुषं निर्दहेदवमानितम् ।
तस्मादेतत्त्रयं नित्यं नावमन्येत बुद्धिमान् ॥ १९ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ २० ॥

अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ २१ ॥

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ २२ ॥

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ २३ ॥

सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ २४ ॥

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ २५ ॥

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ २६ ॥

आचार्यं च प्रवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणान्गाश्च सर्वांश्चैव तपस्विनः ॥ २७ ॥

## १०—दरिद्र-ब्राह्मण-कथा

ततः कदाचिद्‌द्वारपाल आगत्य प्राह—'देव, कौपीनावशेषो विद्वान्द्वारि वर्तते' इति। राजा—'प्रवेशय' इति। ततः प्रविष्टः स कविर्भोजमालोक्याद्य मे दारिद्र्यनाशो भविष्यतीति मत्वा तुष्टो हर्षाश्रूणि मुमोच। राजा तमालोक्य प्राह—'कवे, किं रोदिषि' इति। ततः कविराह—'राजन्, आकर्णय मद्‌गृहस्थितिम्।

अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यत्नात्सुपिहितवती दीनवदना।
मयि क्षीणोपाये यदकृत दृशावश्रुशबले
तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः॥

राजा शिव शिव कृष्ण कृष्ण इत्युदीरयन्प्रत्यक्षरलक्षं दत्वा प्राह—'सुकवे, त्वरितं गच्छ गेहम्। त्वद्‌गृहिणी खिन्नाभूत्' इति।

---

## ११—ध्रुव-कथा

स्वायम्भुवस्य मनोः प्रियव्रतोत्तानपादौ द्वौ सुताव
उत्तानपादस्य द्वे भार्ये बभूवतुः। अभीष्टायां सुरुच्यां सुत

## १०—दरिद्र-ब्राह्मण-कथा

कदाचिद्द्वारपाल आगत्य प्राह—'देव, कोपी-
विद्वान्द्वारि वर्तते' इति । राजा—'प्रवेशय' इति ।
वेष्टः स कविर्भोजमालोक्याद्य मे दारिद्र्यनाशो
ति मत्वा तुष्टो हर्षाश्रूणि मुमोच । राजा तमालोक्य
वे, किं रोदिषि' इति । ततः कविराह—'राजन्,
मद्गृहस्थितिम् ।

ा लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यत्नात्सुपिहितवती दीनवदना ।
ये क्षीणोपाये यदकृत दृशावश्रुशवले
तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः ॥

जा शिव शिव कृष्ण कृष्ण इत्युदीरयन्प्रत्यक्षरलक्षं
ाह—'सुकवे, त्वरितं गच्छ गेहम् । त्वद्गृहिणी
तु' इति ।

---

## ११—ध्रुव-कथा

ायम्भुवस्य मनोः प्रियव्रतोत्तानपादौ द्वौ सुतावास्ताम् ।
ादस्य द्वे भार्ये बभूवतुः । अभीष्टायां सुरुच्यामुत्तमो नाम
ा०—२

सुरुच्या वचसा चेदत्यर्थं दुःखितो भवांस्तदा पुण्योपचये यत्नं करोतु । धर्मात्मा, प्राणिहिते रतः, सुशीलश्च भव' इति ।

ध्रुवः प्रत्यवदत् । अम्ब, मम प्रशमाय यत्त्वयोक्तं तद्दुष्ट-वचसा भिन्ने मम हृदये नान्तरं लभते । अहं तथा यतिष्ये यथा निखिलस्य जगतः पूजनीयमुत्तमोत्तमं स्थानं प्राप्स्यामि । उत्तमो मम भ्राता पित्रा दत्तं राजासनमाप्नोतु, अहं पुनः स्वकर्मणा शाश्वतं स्थानमिच्छामि यन्मम पिताऽपि न प्रापेति । इत्युक्त्वा मातुर्गृहान्निर्गत्य नगराद्बहिरुपवनं ययौ । तत्र पूर्वा-गतान् सप्तर्षीन्ददर्श । स राजपुत्रस्तान्सर्वान्प्रणिपत्य प्रश्रया-वनतोऽभ्यभाषत । भो ऋषयः, मां सुनीत्यां जातमुत्तानपाद-तनयं ध्रुवं निर्वेदाद्युष्माकमन्तिकं प्राप्तं निबोधतेति । ऋषय ऊचुः । वत्स, पञ्चवर्षीयो नृपनन्दनस्त्वं नैव च किञ्चिदुद्वेग-कारणं पश्यामः । किंनिमित्तस्ते निर्वेदस्तत्कथ्यतामिति ।

ततो ध्रुवस्तेभ्यः सर्वं शशंस । तन्निशम्य ऋषयः परस्परं प्रोचुः । अहो क्षात्रं परं तेजो यद्बालस्यापि हृदयात्सपत्न्या मातुरुक्तं नापसर्पतीति । ते ध्रुवमभाषन्त । भोः क्षत्रिय, निर्वे-दाद्यत्त्वयाऽधुना कर्तुं व्यवसितं तदस्मभ्यं कथय । यच्चास्मा-भिस्तव साहाय्यं कार्यं तदपि ब्रूहीति । ध्रुवोऽब्रवीत् । नाहं धनं राज्यं वेच्छामि । यत्पुराऽन्येन नैव प्राप्तं तदेवैकं स्थानं कामये । कथमेतादृशं स्थानं प्राप्यते तन्महयं कथ

भवन्त इति। मरीच्यादयः सप्तर्षय ऊचुः। अनाराधितगोविन्दैर्नरैः श्रेष्ठं स्थानं न प्राप्यते। तस्मादच्युतमाराधयेति। तस्याराधनं मया कथं कर्तव्यमिति ध्रुवेण पृष्टे सप्तर्षय ऊचुः। अखिलान्बाह्यार्थान् विहाय मनो जगद्धाम्नि विष्णौ निश्चलं कुरु। एवमेकाग्रचित्तेन तन्मयेन त्वया, ओं नमो वासुदेवायेति जप्तव्यमिति।

एतन्निशम्य तानृषीन्प्रणम्य ध्रुवस्तस्मादुपवनान्निर्गत्य यमुनातटे मधुवनं गत्वा तपस्तेपे। अनन्यमनसा भगवन्तं हरिं ध्यायतस्तस्य भारमुद्वोढुमक्षमा धरणी चचाल देवाश्च परमं क्षोभं जग्मुः। इन्द्रस्तस्य समाधेर्भङ्गं कर्तुं विविधा माया आविश्चकार। तस्य माता सुनीतिस्तस्य पुरतः स्थिता करुणां वाचमुवाच। पुत्र, अस्माच्छरीरव्ययान्निवर्तस्व, दीनां मां परित्यक्तुं नार्हसि। क्व च त्वं पञ्चवर्षीयः क्व चैतद्दारुणं तपः। अयं तेऽध्ययनस्य क्रीडायाश्च कालः। यद्यद्य तपो न परित्यजसि तर्हि पश्यतस्तवेमान्प्राणानहं त्यक्ष्यामीति।

एवमुक्त्वा इन्द्रमायानिर्मिता सुनीतिस्तिरोदधे। ततोऽभ्युद्यतोग्रशस्त्राणि रक्षांस्याविर्बभूवुः, शतशश्च शिवा नेदुः। तानि रक्षांसि तत्कृता भीषणा नादाश्च गोविन्दासक्तचित्तस्य तस्य नयनगोचरतां नैव ययुः। सर्वासु मायासु विलीनासु देवा हरिं शरणं जग्मुरूचुश्च। देवदेव जगन्नाथ न विद्मः किं

ध्रुवः शक्रत्वं सूर्यत्वं कुबेरत्वं वा वाञ्छति। तस्माद्ध्रुवं तपसो विनिवर्तयेति। भगवानुवाच। ध्रुवो नैव शक्रत्वादिकं प्रार्थयते। यूयं विगतचिन्ता यात। तस्य काममहं संपादयिष्यामीति।

भगवान् विष्णुर्ध्रुवस्य तपसा तोषितस्तं गत्वोवाच। वत्स ध्रुव, यद्बाह्यार्थनिरपेक्षं त्वया मयि चित्तमाहितं, तेन तुष्टोऽहम्। वरं वरयेति। इदं भगवतो वचनं निशम्य चक्षुषी उन्मील्य शङ्खचक्रगदाशार्ङ्गवरासिधरं किरीटिनमच्युतमालोक्य शिरसा प्रणनाम जगाद च। देवदेव यदि मे तपसा भगवान्परमं तोषं गतस्तदा भगवन्तं स्तोतुमिच्छामि। वरमेतं मह्यं प्रयच्छ। ब्रह्माद्यैरपि तव गतिर्न ज्ञायते। तदहं बालकस्त्वां स्तोतुं कथं शक्ष्यामीति।

ततः प्राञ्जलिं ध्रुवं भगवान् विष्णुः शङ्खप्रान्तेन पस्पर्श। तत्क्षणमेव प्रसन्नवदनो नृपनन्दनो भूतधातारमच्युतं तुष्टाव। भूमिरापोऽनलो वायुः खं मनो बुद्धिश्च यस्य रूपं तं परमेशं नतोऽस्मि। त्वं सर्वात्मकः सर्वेशश्चासीति। भगवानुवाच। ध्रुव, यत्त्वयाऽहं दृष्टस्तपसस्तत्फलं त्वया प्राप्तम्। मद्दर्शनं तु नैव विफलं जायते। तस्मादभिमतं वरं वरयेति।

ध्रुवो व्याजहार। भगवन्, त्वं सर्वभूतानां हृदि तिष्ठसि यन्ममेप्सितं तत्किं तव परोक्षम्। तथापि दुर्विनीतहृद

मया यत्प्रार्थ्यते तत्तुभ्यं कथयिष्यामि। ममोदरादजातस्य तव नैतद्राजासनं योग्यमिति मातुः सपत्नी मां गर्वादवदत्। अतस्त्वत्प्रसादादव्ययं सर्वेषामुत्तमं स्थानमहं प्रार्थय इति। भगवानवदत्। यत्त्वया प्रार्थितं स्थानं तत्त्वं लप्स्यसे। भौमादीनां ग्रहाणां नक्षत्राणां सप्तर्षीणां चाप्युपरि स्थानं मया तुभ्यं दत्तम्। सुनीतिरपि तव माता तारका भूत्वाऽऽकल्पं त्वत्सन्निधौ निवत्स्यतीति। एवं ध्रुवो भगवत्प्रसादाद्ध्रुवं स्थानमध्यास्त।

---

## १२–कैकेयी-राम-संवादः

### (१)

स दीन इव शोकार्तो विषण्णवदनद्युतिः।
कैकेयीमभिवाद्यैव रामो वचनमब्रवीत्॥ १॥

कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता।
कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय॥ २॥

शारीरो मानसो वापि कच्चिदेनं न बाधते।
सन्तापो वाऽभितापो वा दुर्लभं हि सदा सुखम्॥३॥

कच्चिन्न किञ्चिद्भरते कुमारे प्रियदर्शने।
शत्रुघ्ने वा महासत्त्वे मातॄणां वा ममाशुभम्॥ ४॥

अतोपयन्महाराजमकुर्वन्वा पितुर्वचः ।
मुहूर्त्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥ ५ ॥

एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ ६ ॥

न राजा कुपितो राम व्यसनं नास्य किञ्चन ।
किञ्चिन्मनोगतं त्वस्य त्वद्भयान्नानुभाषते ॥ ७ ॥

प्रियं त्वामप्रियं वक्तुं वाणी नास्य प्रवर्तते ।
तदवश्यं त्वया कार्यं यदनेन श्रुतं मम ॥ ८ ॥

एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च ।
स पश्चात्तप्यते राजा यथाऽन्यः प्राकृतस्तथा ॥ ९ ॥

अतिसृज्य ददानीति वरं मम विशांपतिः ।
स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥ १० ॥

धर्ममूलमिदं राम विदितं च सतामपि ।
तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ ११ ॥

एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच व्यथितो रामस्तां देवीं नृपसन्निधौ ॥ १२ ॥

अहो धिङ्नार्हसे देवि वक्तुं मामीदृशं वचः ।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ १३ ॥

( २ )

तदप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ २३ ॥
एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः ।
जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २४ ॥
इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः ।
नाभिनन्दति दुर्धर्षो यथापूर्वमरिन्दमः ॥ २५ ॥
मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः ।
यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ २६ ॥
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च ।
नियुज्यमानो विस्रब्धः किन्न कुर्यामहं प्रियम् ॥ २७ ॥
अलीकं मानसं त्वेकं हृदयं दहते मम ।
स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥ २८ ॥
तथाऽऽश्वासय ह्रीमन्तं किं त्विदं यन्महीपतिः ।
वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ २९ ॥
गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः ।
भरतं मातुलकुलादद्यैव नृपशासनात् ॥ ३० ॥
दण्डकारण्यमेषोऽहं गच्छाम्येव हि सत्वरः ।
अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ३१ ॥

न नूनं मयि कैकेयि मुख्यानाशंससे गुणान् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ ४१ ॥

यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ ४२ ॥

भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ॥ ४३ ॥

रामस्य तु वचः श्रुत्वा भृशं दुःखगतः पिता ।
शोकादशक्नुवन्वक्तुं प्ररुरोद महास्वनम् ॥ ४४ ॥

---

## १३—तपोदत्तकथा

आसीत्कोऽपि प्रतिष्ठाने तपोदत्त इति द्विजः ।
स पित्रा क्लेश्यमानोऽपि विद्यां नाध्यैत शैशवे ॥ १ ॥

अनन्तरं गर्ह्यमाणः सर्वैरनुशयान्वितः ।
स विद्यासिद्धये तप्तुं तपो गङ्गातटं ययौ ॥ २ ॥

तत्राश्रितोग्रतपसस्तस्य तं वीक्ष्य विस्मितः ।
वारयिष्यन्द्विजच्छद्मा शक्रो निकटमाययौ ॥ ३ ॥

आगत्य च स गङ्गायास्तटाच्चिक्षेप वारिणि ।
उद्धृत्योद्धृत्य सिकताः पश्यतस्तस्य सोर्मिणि ॥ ४ ॥

न नूनं मयि कैकेयि मुख्यानाशंससे गुणान् ।
यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ ४१ ॥

यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ ४२ ॥

भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा ।
तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ॥ ४३ ॥

रामस्य तु वचः श्रुत्वा भृशं दुःखगतः पिता ।
शोकादशक्नुवन्वक्तुं प्ररुरोद महास्वनम् ॥ ४४ ॥

---

## १३—तपोदत्तकथा

आसीत्कोऽपि प्रतिष्ठाने तपोदत्त इति द्विजः ।
स पित्रा क्लेश्यमानोऽपि विद्यां नाध्यैत शैशवे ॥ १ ॥

अनन्तरं गर्ह्यमाणः सर्वैरनुशयान्वितः ।
स विद्यासिद्धये तप्तुं तपो गङ्गातटं ययौ ॥ २ ॥

तत्राश्रितोग्रतपसस्तस्य तं वीक्ष्य विस्मितः ।
वारयिष्यन्द्विजच्छद्मा शक्रो निकटमाययौ ॥ ३ ॥

आगत्य च स गङ्गायास्तटाच्चिक्षेप वारिणि ।
उद्धृत्योद्धृत्य सिकताः पश्यतस्तस्य सोर्मिणि ॥ ४

इव मानसं कलुषीक्रियते सर्वस्य। कलुषीकृते च मानसे किमिदमिति सर्वमेव दर्शनं नश्यति। न चित्तमालोचयति। न बुद्धिर्बुध्यते। न विवेकोऽपि विविनक्ति।

किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमतिक्रान्तम्। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। वयसैव सहारोहत्यभिनवा प्रीतिः। वक्षसैव सह विस्तीर्यते वाञ्छा। बलेनैव सहोपचीयते मदः। दोर्द्वयेनैव सह स्थूलतामापद्यते धीः। मध्येनैव सह कार्श्यमुपयाति श्रुतम्। ऊरुयुगलेनैव सहोपचीयतेऽविनयः। श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः। आकारेणैव सह आविर्भवन्ति हृदयाद्विकाराः।

अभिनवयौवनत्वमप्रतिरूपत्वममानुपशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा। सर्वाविनयानामेकैकमप्येपामायतनं, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगतृष्णिका। तान्येव विपयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः।

---

इव मानसं कलुषीक्रियते सर्वस्य। कलुषीकृते च मानसे किमिदमिति सर्वमेव दर्शनं नश्यति। न चित्तमालोचयति। न बुद्धिर्बुध्यते। न विवेकोऽपि विविनक्ति।

किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमतिक्रान्तम्। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। वयसैव सहारोहत्यभिनवा प्रीतिः। वक्षसैव सह विस्तीर्यते वाञ्छा। बलेनैव सहोपचीयते मदः। दोर्द्वयेनैव सह स्थूलतामापद्यते धीः। मध्येनैव सह कार्श्यमुपयाति श्रुतम्। ऊरुयुगलेनैव सहोपचीयतेऽविनयः। श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः। आकारेणैव सह आविर्भवन्ति हृदयाद्विकाराः।

अभिनवयौवनत्वमप्रतिरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा। सर्वाविनयानामेकैकमप्येषामायतनं, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगतृष्णिका। तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः।

तद्दृष्ट्वा मुक्तमौनस्तं तपोदत्तः स पृष्टवान् ।
अश्रान्तः किमिदं ब्रह्मन्करोपीति सकौतुकम् ॥ ५ ॥

निर्बन्धपृष्टः स च तं शक्रोऽवादीद्द्विजाकृतिः ।
सेतुं बध्नामि गङ्गायां ताराय प्राणिनामिति ॥ ६ ॥

ततोऽब्रवीत्तपोदत्तः सेतुं किं मूर्ख बध्यते ।
गङ्गायामोघहार्य्याभिः सिकताभिः कदाचन ॥ ७ ॥

तच्छ्रुत्वा तमुवाचैवं शक्रोऽथ द्विजरूपधृक् ।
यद्येवं वेत्सि तद्विद्यां विना पाठं विना श्रुतम् ॥ ८ ॥

कस्माद्व्रतोपवासाद्यैस्त्वं साधयितुमुद्यतः ।
इयं शशविषाणेच्छा व्योम्नि वा चित्रकल्पना ॥ ९ ॥

अनक्षरो लिपिन्यासो यद्विद्याध्ययनं विना ।
एवं यदि भवेदेतन्नह्यधीयीत कश्चन ॥ १० ॥

इत्युक्तः स तपोदत्तः शक्रेण द्विजरूपिणा ।
विचार्य तत्तथा मत्वा तपस्त्यक्त्वा गृहं ययौ ॥ ११ ॥

---

## १४—शोकयौवनयोः प्रभावः

प्राज्ञस्यापि, बहुश्रुतस्यापि, विवेकिनोऽपि, धीर सत्त्ववतोऽप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्पसलिलेन

व मानसं कलुषीक्रियते सर्वस्य। कलुषीकृते च मानसे क्रमिदमिति सर्वमेव दर्शनं नश्यति। न चित्तमालोचयति। र बुद्धिर्बुध्यते। न विवेकोऽपि विविनक्ति।

किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमतिक्रान्तम्। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। वयसैव सहारोहत्यभिनवा प्रीतिः। वक्षसैव सह विस्तीर्यते वाञ्छा। बलेनैव सहोपचीयते मदः। दोर्द्वयेनैव सह स्थूलतामापद्यते धीः। मध्येनैव सह कार्श्यमुपयाति श्रुतम्। ऊरुयुगलेनैव सहोपचीयतेऽविनयः। श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः। आकारेणैव सह आविर्भवन्ति हृदयाद्विकाराः।

अभिनवयौवनत्वमप्रतिरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा। सर्वाविनयानामेकैकमप्येषामायतनं, किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। इन्द्रियहरिणहारिणी च ततमतिदुरन्तेयमुपभोगतृष्णिका। तान्येव विषयस्वरू ।।ण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः।

---

ादिने । सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे
र्वन्ति, तस्मै ददति, तस्य वचनं शृण्वन्ति, तं बहु मन्यन्ते,
ोऽहर्निशम् उपरचितांजलिः अधिदैवतमिव विगतान्य-
र्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति ।

---

## १६—महाप्रस्थानम्

श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ॥ १ ॥

कालः पचति भूतानि सर्वाण्येव महामते ।
इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन् ॥ २ ॥

अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः ।
अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ॥ ३ ॥

ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ ४ ॥

अभिषिच्य स्वराज्ये च राजानं च परिक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पांडवाग्रजः ॥ ५ ॥

परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ ६ ॥

ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ १६ ॥

तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् ॥ १७ ॥

तेषां तु गच्छतां शीघ्रं सर्वेषां योगधर्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ १८ ॥

यु० उ०—पक्षपातो महानस्या विशेषेण धनञ्जये ।
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तमाः ॥ १९ ॥

सहदेवस्ततो विद्वान्निपपात महीतले ॥ २० ॥

यु० उ०—आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन ।
तेन दोषेण पतितस्तस्मादेष नृपात्मजः ॥ २१ ॥

कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुः प्रियः शूरो नकुलो निपपात ह ॥२२॥

यु० उ०—रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर ॥ २३ ॥

तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः ।
पपात शोकसन्तप्तस्ततोऽनु परवीरहा ॥ २४ ॥

अवमेने धनुर्ग्राहानेष सर्वांश्च फाल्गुनः ।
इत्युक्त्वा प्रस्थितो राजा भीमोऽथ निपपात ह ॥२५॥

यु० उ०—भक्तत्यागं प्राहुरत्यन्तपापं
तुल्यं लोके ब्रह्मवध्याकृतेन ।
तस्मान्नाहं जातु कथञ्चनाद्य
त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र ॥ ३४ ॥

तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसम्प्रयुक्तैः ॥ ३५ ॥

अभिजातोऽसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ ३६ ॥

अतस्तवाक्षया लोकाः स्वशरीरेण भारत ।
प्राप्तोऽसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ ३७ ॥

स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ ३८ ॥

---

## १७—विद्याप्रशंसा

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥ १ ॥

अज्ञाज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्,
कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ ७ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ ८ ॥

कान्पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किंवा काव्यरसः स्वादुः किंवा स्वादीयसी सुधा ॥९॥

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ १० ॥

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ११ ॥

---

## १८—गजेन्द्रमोक्षः

अस्ति गिरिवरः क्षीरोदेनावृतस्त्रिकूटो नाम यो रौप्यायसहिरण्मयैस्त्रिभिः शृङ्गैः पयोनिधिं दिशः खं च रोचयन्नास्ते । तस्य गिरेर्द्रोण्यां भगवतो वरुणस्य ऋतुमन्नामोद्यानमासीत् । तस्मिन्नुद्याने विपुलमेकं सर आसीत् । त्रिकूटगिरिकाननाश्रयः कश्चिद्गजेन्द्रो घर्मतप्तः करिभिः करेणुभिः कलभैश्च वृतस्तत्सरोवराभ्याशमागच्छत । तस्मिन्

तं गजमेवमार्तमुपलभ्य जगन्निवासो गरुडेन समुह्यमा
देवैः सह गजेन्द्रमभ्याजगाम । स गजेन्द्रो हरिं खे दृ
साम्बुजं करमुत्क्षिप्य वाचमुदैरयत् 'नारायण, अखिलगु
भगवन् नमस्ते' इति । तं पीडितं गजं सग्राहं सरस उज्जह
भगवान् विपाटितमुखाद्ग्राहाच्चामूमुचत् ।

तदा हरेस्तत्कर्म शंसन्तो ब्रह्माद्या देवाः कुसुमवृ
मुमुचुः, दिव्या दुन्दुभयो नेदुः । गन्धर्वाप्सरसो ननृतुर्जगुश्
स ग्राहः सद्यः गन्धर्वरूपमास्थाय पुरुषोत्तमं शिरसा प्रण
परमेशयशोऽगायत्, देवैनं प्रदक्षिणीकृत्य स्वं लोकं जग
म । गजेन्द्रोऽपि भगवत्स्पर्शेनाज्ञानबन्धनाद्विमुक्तो भगव
रूपं प्राप । स पूर्वस्मिन् जन्मनि द्रविडेषु पाण्ड्य इन्द्रद्यु
इति ख्यातो विष्णुव्रतपरायणो राजा बभूव । एकदाऽसाव
काले गृहीतमौनव्रतो यावद्धरिं समर्चयामास तावन्महामुनि
गस्त्यः शिष्यैः सह तत्रागच्छत् । अकृतार्घ्यादिकं तू
ष्णीं तं वीक्ष्य ऋषिश्चुकोप शापं च तस्मा अददात्
अस्यानुरूपं कृत्वा स्तब्धमतिर्गज इवान्धं तमो विशत्विति
अगस्त्यशापादेवं गजेन्द्रत्वमापन्नं तं भगवानतो मोक्षयामास

---

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥१०॥

---

## २०—दुर्वाससा शप्तायाः सरस्वत्याः कथा

पुरा किल भगवान् स्वं लोकमधितिष्ठन् परमेष्ठ
विकासिनि पद्मविष्टरे समुपविष्टः शुनासीरप्रमुखैर्गीर्वाणै
परिवृतो ब्रह्मोदिताः कथाः कुर्वन्, अन्याश्च निरवद्या विद्य
गोष्ठीर्भावयन् कदाचिदासाञ्चक्रे । तथासीनं च तं त्रिभुव
प्रतीक्ष्यं सर्वे दक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षि
पुरःसरमहामुनयः सिषेविरे । विद्याविसंवादकृताश्च त
तेषामन्योन्यस्य विवादाः प्रादुरभूवन् । अथातिरोषणः प्रकृत
महातपा मुनिः अत्रेस्तनयः तारापतेः भ्राता द्विती
मंदुनाम्ना मुनिना सह कलहायमानः साम गायन् क्रोधान
विस्वरमकरोत् । सर्वेषु शापभयप्रतिपन्नमौनेषु मुनिषु दे
सरस्वती तच्छ्रुत्वा जहास । दृष्ट्वा तु तां तथा हसन्तीं स मुनिः—
आः पापे, दुर्विदग्धे, मामुपहससि इत्युक्त्वा अश्रा

वृथा वहसि कृत्रिमोपशमम्' इत्युक्त्वा पुनराह—भद्रे सरस्वति, मा गा विषादम् । एषा त्वामनुयास्यति सावित्री । विनोदयिष्यति चास्मद्विरहितां त्वाम् । आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यतीत्यभिधाय विसर्जितसुरासुरमुनिमण्डलः समुचिताह्निककरणायोदतिष्ठत् । सरस्वत्यपि शप्ता किञ्चिदधोमुखी सह सावित्र्या गृहमगात् ।

---

## २१—स्फुटपद्यानि

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥१॥

अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ।
रविरपि तपति न तादृग्यादृक् तपति वालुकानिकरः ॥२॥

सिंहान्नैव गजान्नैव व्याघ्रान्नैव च नैव च ।
अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥ ३ ॥

हे हेमकार परदुःखविचारमूढ,
किं मां वृथा क्षिपसि वारशतानि वह्नौ ।
दग्धे पुनर्मयि भवन्ति गुणातिरेकाः,
लाभः परन्तु मुखे तव भस्मपातः ॥ ४ ॥

चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ।
नाहं गतो न मे भ्राता कस्येदं हस्तकौशलम् ॥ ५ ॥

यद्यपि बहु नाधीषे पठ पुत्र
तथापि व्याकरणम् ।
स्वजनः श्वजनो मा भूत्
सकलः शकलः सकृच्छकृत् ॥ ६ ॥

मृगमीनसज्जनानां
तृणजलसन्तोषविहितवृत्तीनां ।
लुब्धकधीवरपिशुना
निष्कारणवैरिणो भवन्ति ॥ ७ ॥

विधौ विरुद्धे न पयः पयोनिधौ,
सुधौघसिन्धौ न सुधा सुधाकरे ।
न वाञ्छितं सिद्ध्यति कल्पपादपे,
न हेम हेमप्रभवे गिरावपि ॥ ८ ॥

वयमिह परितुष्टा वल्कलैस्त्वञ्च लक्ष्म्या,
सम इह परितोषो निर्विशेषाविशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला,
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥९॥

इतरतापशतानि यदृच्छया,
विलिखितानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं,
शिरसि मा लिख मा लिख मा लिख ॥१०॥

कस्यचित्किमपि नो हरणीयम्,
मर्मवाक्यमपि नोच्चरणीयम् ।
श्रीपतेः पदयुगं स्मरणीयम्,
लीलया भवजलं तरणीयम् ॥ ११ ॥

इति प्रथमो भागः



मापन्नास्ते वनेऽभिगम्यानिशं शरानस्यन्तमेकलव्यं ददृशुः। विकृतदर्शनं तं नाभ्यजानन्को भवानिति च पर्यपृच्छन्। एकलव्य उवाच । निषादाधिपतेः सुतं धनुर्वेदकृतश्रमं द्रोणशिष्यं मां वित्तेति ।

पाण्डवा वने वृत्तं सर्वं द्रोणायाचख्युः । अर्जुनस्तु रहो द्रोणं समासाद्य प्रणयादब्रवीत् । अहं भवता पूर्वमुक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यतीति। अथ कस्मान्मद्विशिष्टो लोकादपि च बलीयान्निषादाधिपतेः सुतो भवतः शिष्योऽस्तीति ।

द्रोणो मुहूर्तं चिन्तयित्वाऽर्जुनमादायैकलव्यं गतः। जटिलं चीरवाससं धनुष्पाणिमनिशं शरानस्यन्तमेकलव्यं ददर्श । एकलव्यस्तु द्रोणमायान्तमवलोक्य प्रत्युद्गम्य शिरसा प्रणम्यात्मानं शिष्यं निवेद्य द्रोणस्याग्रतः प्राञ्जलिस्तस्थौ । द्रोण एकलव्यमुवाच । यदि मे शिष्योऽसि वेतनं दीयतामिति । एकलव्यः प्रत्यवदत् । किं प्रयच्छामि । भवानाज्ञापयतु । नहि किञ्चिद्गुरवेऽदेयं ममेति । द्रोणस्तमब्रवीत् । दक्षिणोऽङ्गुष्ठो दीयतामिति । द्रोणस्य दारुणं वचः श्रुत्वाऽऽत्मनः प्रतिज्ञां रक्षन्सत्यवादी निषादाधिपतेः सुतोऽदीनमानसोऽङ्गुष्ठं छित्त्वा द्रोणाय प्राददात् । ततो शरमेकलव्योऽङ्गुलीभिरेव व्यकर्षत् । न च तथा शीघ्रोऽभवद्यथा पूर्वमासीत् ।

## ३—सीतायाः रावणं प्रत्युत्तरम्

रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ १ ॥

महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ २ ॥

सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसन्धं महाभागमहं राममनुव्रता ॥ ३ ॥

महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ४ ॥

पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्तिं महाबाहुमहं राममनुव्रता ॥ ५ ॥

त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ६ ॥

क्षुधितस्य हि सिंहस्य मृगशत्रोस्तरस्विनः ।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ७ ॥

मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि ।
कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ॥ ८ ॥

## ३—सीतायाः रावणं प्रत्युत्तरम्

रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ १ ॥

महागिरिमिवाकम्पं महेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ २ ॥

सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसन्धं महाभागमहं राममनुव्रता ॥ ३ ॥

महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ४ ॥

पूर्णचन्द्राननं रामं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्तिं महाबाहुमहं राममनुव्रता ॥ ५ ॥

त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ६ ॥

क्षुधितस्य हि सिंहस्य मृगशत्रोस्तरस्विनः ।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ७ ॥

मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि ।
कालकूटं विषं पीत्वा स्वस्तिमान् गन्तुमिच्छसि ॥ ८ ॥

[illegible] ।
[illegible] मिच्छसि ॥ ९ ॥
[illegible] हर्तुमिच्छसि ।
[illegible] हर्तुमिच्छसि ॥ १० ॥
कल्याणवृत्तां मे भार्यां [illegible] हर्तुमिच्छसि ।
[illegible] हर्तुमिच्छसि ॥ ११ ॥

---

## ४—हरिशर्मकथा

कस्मिंश्चिन्नद्ग्रामे हरिशर्मा नाम दरिद्रो मूर्खश्च विप्र आसीत्। तस्यायमपरो गण्डस्योपरि स्फोटः सम्भूतो यद्वृत्ति विरहेऽपि बहुपत्यता। एकदा सकुटुम्बो भिक्षार्थं भ्रमन्कस्मिं श्चिन्नगरे स्थूलदत्ताख्यं महाधनं गृहस्थमाजगाम। स्वपुत्रा न्गवादिरक्षकान् विधाय भार्यां च कर्मकरीं सेवकं चात्मानं कृत्वा तस्य गृहे न्यवसत्।

अथ गच्छति काले स्थूलदत्तस्य सुतायाः परिणयोत्सवे महानागतः। तत्र च महानासीज्जनसंमर्दः। तदा हरिशर्मा मनस्यकरोत्। आकण्ठं घृतमांसं मयाऽधुना लब्धव्यमिति किन्तु महोत्सवे हरिशर्मा न केनापि स्मृतः। ततोऽनाहारनि र्विण्णो निशि भार्यामब्रवीत्। मम दारिद्र्यान्मौर्ख्याच्चेदशमगौ

रवम् । तस्मात्कपटमाचरिष्यामि येनाहमस्य स्थूलदत्तस्य बहुमतो भवेयम् । त्वं चावसरे प्राप्तेऽहं ज्योतिःशास्त्रपारङ्गत इत्यस्मै निवेदयेति ।

एवं तामुक्त्वा सुप्ते जने जामातृवाहनो हयस्तेन स्थूलदत्तगृहाज्जहे दूरे च प्रच्छन्नं स्थापितः । सेवका इतस्ततस्तं विचिन्वन्तोऽपि न लेभिरे । हरिशर्मणो भार्या हयचौरगवेषिणममङ्गलवित्रस्तं स्थूलदत्तमेत्योवाच । मदीयो भर्ता ज्योतिर्विद्याकोविदः । किमर्थं स न पृच्छयत इति । तच्छ्रुत्वा स्थूलदत्तो हरिशर्माणमाह्वयत् । हरिशर्मोवाच । ह्योऽहं विस्मृतोऽद्य हयेऽपहृते स्मृतोऽस्मीति । स्थूलदत्तस्तं सान्त्वपूर्वमुवाच । विस्मृतिं नः क्षमस्व । केनाश्वोऽपहृतस्तन्नो कथयेति । हरिशर्मा ततो मिथ्या रेखाः कुर्वन्नुवाच । इतो दक्षिणसीमान्ते चोरैर्हयः संस्थापितः । यावदसौ चोरैर्दूरं न नीयते तावदानीयतामिति । तच्छ्रुत्वा धावितैर्नरैः सोऽश्वस्तत्क्षणमेवानीतः । सर्वे च हरिशर्मणो विज्ञानं प्रशशंसुः । ततो ज्ञानीति सर्वैः पूज्यमानः स्थूलदत्तगृहे हरिशर्मोवास ।

गच्छत्सु दिवसेषु केनापि चोरेण राजगृहाद्भूरि सुवर्णादि चोरितम् । यदा चौरो नाज्ञायत तदा ज्ञानिमन्निद्दितो राजा हरिशर्माणमानाययामास । न चानीतः मानवं स्मार्मीति

कालं क्षिपन् राज्ञा वासके सुरक्षितः स्थापितः। तस्मिन्राजकुले काचिच्चेटी जिह्वेति ख्यातासीत्।

तया च भ्रात्रा सार्धं राजगृहाभ्यन्तरात्तत्सुवर्णं चोरितम्। सा रात्रौ वासकं गत्वा हरिशर्मणो ज्ञानाच्छङ्किता द्वारि कर्णं ददौ। हरिशर्मा च तदैकाकी भूत्वा मृषाविज्ञानवादिनीं स्वजिह्वामेवं निनिन्द। दुराचारे जिह्वे, भोगलम्पटया त्वया किमिदमकार्यं कृतम्। अधुना निग्रहं सहस्वेति। तच्छ्रुत्वाऽनेन ज्ञानिनाहं ज्ञातास्मीति भीता सा चेटी युक्त्या तदन्तिकं प्रविश्य तस्य पादयोः पतित्वा तमब्रवीत्। भो ज्ञानिन्, इयं सा जिह्वा या त्वयाऽर्थहारिणीति ज्ञाता। तत्सुवर्णं मयाऽस्यैव मन्दिरस्य पृष्ठतो दाडिमस्याधो भूतले निखातम्। तस्मान्मां रक्ष। यच्च किञ्चिन्मे हस्तगं धनं विद्यते तदपि तुभ्यं ददामीति। एतच्छ्रुत्वा हरिशर्मा सगर्वं तामुवाद। गच्छ दुराचारे, अहं भूतं भव्यं भवत्सर्वं विजानामि। शरणागतां त्वां नोद्घाटयिष्यामि यदि स्वहस्तगतं सर्वं धनं मह्यं दास्यसीति। एवं तेनोक्ता सा चेटी तथेति प्रतिपद्याशु निर्जगाम।

गतायां तस्यां हरिशर्मा व्यचिन्तयत्। अभिमुखे विधावसाध्योऽप्यर्थो लीलयैव सिध्यति। अनर्थ उपस्थिते महान्मेऽर्थः सिद्धः। स्वजिह्वां यावन्निन्दामि तावन्मम पुरतश्चारी जिह्वा समागता। प्रच्छन्नपातकिनः शङ्कयैव प्रका-

स्य महात्मनो व्यसनातुरे जने दया स्वसौख्यनिःसंगता च । सर्वथा नमोऽस्त्वस्मै महाभागाय सर्वभूतशरण्याय अतिविपुल-कारुण्याय अप्रमेयसत्त्वाय' इति ।

---

## ७–सदाचारः

यु० उ०—आयुष्मान् केन भवति अल्पायुर्वापि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥१॥

भी० उ०—आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥२॥

आचारलक्षणो धर्मः संतश्चारित्रलक्षणाः ।
साधूनां च यथा वृत्तमेतदाचारलक्षणम् ॥ ३ ॥

ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ ४ ॥

विशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ ५ ॥

अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ ६ ॥

यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते ।
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ॥ ३३ ॥

गन्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ ३४ ॥

ज्ञातिसम्वन्धिमित्राणि पूजनीयानि सर्वशः ।
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ॥ ३५ ॥

अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ।
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ॥ ३६ ॥

---

## ८—मार्गसहाय-कथा

कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म। स च प्रयोजनवशाद्ग्रामे प्रस्थितः स्वमात्राभिहितः। यत् वत्स! कथमेकाकी व्रजसि। तदन्विष्यतां कश्चिद्द्वितीयः सहायः। स आह—अम्ब! मा भैषीः। निरुपद्रवोऽयं मार्गः, कार्यवशादेकाकी गमिष्यामि। अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात् कर्कटमादाय मात्राऽभिहितः। वत्स! अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायः भवतु। तदेनं गृहीत्वा गच्छ। सोऽपि

मातुर्वचनाद्भाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः। अथ गच्छन् ग्रीष्मोष्मणा सन्तप्तः कश्चित् मार्गस्थं वृक्षमासाद्य तत्रैव प्रसुप्तः। अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः। सोऽपि कर्पूरगुगन्धसहजप्रियत्वात्तं परित्यज्य वस्त्रं विदार्य्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्याद्भक्षयत्। सोऽपि कर्कटस्तत्रैव स्थितः सन् सर्पप्राणानपाहरत्। ब्राह्मणोऽपि यावत् प्रबुद्धः पश्यति तावत् समीपे कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितस्तिष्ठति। तं दृष्ट्वा व्यचिन्तयत्—कर्कटेन अयं हत इति प्रसन्नो भूत्वाऽब्रवीत्—भोः सत्यमभिहित मम मात्रा यत् पुरुषेण कोऽपि सहायः कार्य्यो न एकाकिना गन्तव्यम्। यतो मया श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम् तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः। अथवा साध्विमुच्यते।

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥ १॥

एवमुक्त्वाऽसौ ब्राह्मणो यथाभिप्रेतं गतः। अतोऽहं ब्रवीमि

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन सर्पात् पान्थः प्ररक्षितः ॥ २ ॥

---

## ६—रामस्य सीतां प्रति दुरुक्तम्

तां तु पार्श्वे स्थितां प्रह्वां रामः सम्प्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतं भावं व्याहर्तुमुपचक्रमे ॥ १ ॥

एषाऽसि निर्जिता भद्रे शत्रुं जित्वा रणाजिरे ।
पौरुषाद्यदनुष्ठेयं मयैतदुपपादितम् ॥ २ ॥

गतोऽस्म्यन्तममर्षस्य धर्षणा सम्प्रमार्जिता ।
अवमानश्च शत्रुश्च युगपन्निहतौ मया ॥ ३ ॥

अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।
अद्य तीर्णप्रतिज्ञोऽहं प्रभवाम्यद्य चात्मनः ॥ ४ ॥

या त्वं विरहिता नीता चलचित्तेन रक्षसा ।
दैवसम्पादितो दोषो मानुषेण मया जितः ॥ ५ ॥

सम्प्राप्तमवमानं यस्तेजसा न प्रमार्जति ।
कस्तस्य पौरुषेणार्थो महताप्यल्पतेजसः ॥ ६ ॥

लङ्घनं च समुद्रस्य लङ्कायाश्चापि मर्दनम् ।
सफलं तस्य च श्लाघ्यमद्य कर्म हनूमतः ॥ ७ ॥

युद्धे विक्रमतश्चैव हितं मन्त्रयतस्तथा ।
सुग्रीवस्यससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८ ॥

विभीषणस्य च तथा सफलोऽद्य परिश्रमः ।
विगुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः ॥ ९ ॥

इत्येवं वदतः श्रुत्वा सीता रामस्य तद्वचः ।
मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥

यत्कर्तव्यं मनुष्येण धर्षणां प्रतिमार्जता ।
तत्कृतं रावणं हत्वा मयेदं मानकाङ्क्षिणा ॥ ११ ॥

निर्जिता जीवलोकस्य तपसा भावितात्मना ।
अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥ १२ ॥

विदितश्चास्तु भद्रं ते योऽयं रणपरिश्रमः ।
सुतीर्णः सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १३ ॥

रक्षता तु मया वृत्तमपवादं च सर्वतः ।
प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिमार्जता ॥ १४ ॥

प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता ।
दीपो नेत्रातुरस्येव प्रतिकूलाऽसि मे दृढा ॥ १५ ॥

किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥ २ ॥

न तथाऽस्मि महाबाहो यथा मामवगच्छसि ।
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥ ३ ॥

पृथक्स्त्रीणां प्रचारेण जातिं त्वं परिशङ्कसे ।
परित्यजैनां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ४ ॥

यदहं गात्रसंस्पर्शं गताऽस्मि विवशा प्रभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ५ ॥

मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरी ॥ ६ ॥

सह संवृद्धभावेन संसर्गेण च मानद ।
यदि तेऽहं न विज्ञाता हता तेनास्मि शाश्वतम् ॥ ७ ॥

प्रेषितस्ते महावीरो हनुमानवलोककः ।
लङ्कास्थाऽहं त्वया राजन् किं तदा न विसर्जिता ॥८॥

प्रत्यक्षं वानरस्यास्य तद्वाक्यसमनन्तरम् ।
त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥ ९ ॥

न वृथा ते श्रमोऽयं स्यात्संशयेऽन्यस्य जीवितम् ।
सुहृज्जनपरिक्लेशो न चायं विफलस्तव ॥ १० ॥

किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ॥ २ ॥

न तथाऽस्मि महाबाहो यथा मामवगच्छसि ।
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥ ३ ॥

पृथक्स्त्रीणां प्रचारेण जातिं त्वं परिशङ्कसे ।
परित्यजैनां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ४ ॥

यदहं गात्रसंस्पर्शं गताऽस्मि विवशा प्रभो ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ५ ॥

मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरी ॥ ६ ॥

सह संवृद्धभावेन संसर्गेण च मानद ।
यदि तेऽहं न विज्ञाता हता तेनास्मि शाश्वतम् ॥ ७ ॥

प्रेषितस्ते महावीरो हनुमानवलोककः ।
लङ्कास्थाऽहं त्वया राजन् किं तदा न विसर्जिता ॥८॥

प्रत्यक्षं वानरस्यास्य तद्वाक्यसमनन्तरम् ।
त्वया संत्यक्तया वीर त्यक्तं स्याज्जीवितं मया ॥ ९ ॥

न वृथा ते श्रमोऽयं स्यात्संशयेऽन्यस्य जीवितम् ।
सुहृज्जनपरिक्लेशो न चायं विफलस्तव ॥ १० ॥

